अधिरूढे महाभावे विरुद्धैर्विरसा युतिः ॥ ४१ ॥
न स्यादित्युज्ज्वले राधाकृष्णयोर्दर्शितं पुरा ।
क्वाप्यचिन्त्यमहाशक्तौ महापुरुषशेखरे ॥ ४२ ॥
रसावलिसमावेशः स्वादायैवोपजायते ।

इति भक्तिरसामृतसिन्धावुत्तरविभागे रसानां-
मैत्रीवैरस्थितिलहरी ॥ ८ ॥

## नवमलहरी—

पूर्वमेवानुशिष्टेन विकला रसलक्ष्मणा ।
रसा एव रसाभासा रसज्ञैरनुकीर्त्तिताः ॥ १ ॥
स्युस्त्रिधोपरसाश्चानुरसाश्चापरसाश्च ते ।
उत्तमा मध्यमाः प्रोक्ताः कनिष्ठाश्चेत्यमी क्रमात् ॥ २ ॥
प्राप्तैः स्थायिविभावानुभावाद्यैस्तु विरूपताम् ।
शान्तादयो रसा एव द्वादशोपरसा मताः ॥ ३ ॥
ब्रह्मभावात्परब्रह्मण्यद्वैताधिक्ययोगतः ।
तथा बीभत्सभूमादेः शान्तो ह्युपरसो भवेत् ॥ ४ ॥
कृष्णस्याग्रेऽतिधाष्ट्र्येन तद्भक्तेष्ववहेलया ।
स्वाभीष्टदेवतोऽन्यत्र परमोत्कर्षवीक्षया ॥ ५ ॥
मर्यादाऽतिक्रमाद्यैश्च प्रीतोपरसता मता ।
एकस्मिन्नेव सख्येन हरिमित्राद्यवज्ञया ॥ ६ ॥
युद्धभूमादिना चापि प्रेयानुपरसो भवेत् ।
सामर्थ्याधिक्यविज्ञानाल्लालनाद्यप्रयत्नतः ॥ ७ ॥
करुणस्यातिरेकादेस्तुर्य्यश्चोपरसो भवेत् ।
द्वयोरेकतरस्यैव रतिर्या खलु दृश्यते ॥ ८ ॥

याऽनेकत्र तथैकस्य स्थायिनः सा विरूपता।
विभावस्यैव वैरूप्यं स्थायिन्यत्रोपचर्य्यते ॥ ६ ॥
अत्यन्ताभाव एवात्र रतेः खलु विवक्षितः।
एतस्याः प्रागभावे तु शुचिर्नोपरसो भवेत् ॥ १० ॥
के चित्तु नायकस्यापि सर्वथा तुल्यरागतः।
नायिकास्वप्यनेकासु वदन्त्युपरसं शुचिम् ॥ ११ ॥
वैदग्ध्यौज्ज्वल्यविरहो विभावस्य विरूपता।
लतापशुपुलिन्दीषु वृद्धास्वपि स वर्तते ॥ १२ ॥
स्थायिऽनोत्र विरूपत्वमेकरागतयाऽपि चेत्।
घटेतासौ विभावस्य विरूपत्वेऽप्युदाहृति ॥ १३ ॥
शुचित्वौज्ज्वल्यवैदग्ध्यात्सुवेषत्वाच्च कथ्यते।
शृङ्गारस्य विभावत्वमन्यत्राभासता ततः ॥ १४ ॥
सभयानां व्यतिक्रान्तिर्ग्राम्यत्वं धृष्टताऽपि च।
वैरूप्यमनुभावादेर्मनीषिभिरुदीरितम् ॥ १५ ॥
समयाः खण्डिताऽऽदीनां प्रिये रोषोदितादयः।
पुंसः स्मितादयश्चात्र प्रियया ताडनादिषु ॥ १६ ॥
एतेषामन्यथाभावः समयानां व्यतिक्रमः।
बालशब्दाद्युपन्यासो विरसोक्तिप्रपञ्चनम् ॥ १७ ॥
कटीकण्डूतिरित्याद्यं ग्राम्यत्वं कथितं बुधैः।
प्रकटप्रार्थनाऽऽदिः स्यात्सम्भोगादेस्तु धृष्टता ॥ १८ ॥
एवमेव तु गौणानां हासादीनामपि स्वयम्।
विज्ञेयोपरसत्वस्य मनीषिभिरुदाहृतिः ॥ १६ ॥
भक्तादिभिर्विभावाद्यैः कृष्णसम्बन्धवर्जितैः।
रसा हास्यादयः सप्त शान्तश्चानुरसा मताः ॥ २० ॥
एवमेवात्र विज्ञेया वीरादेरप्युदाहृतिः।

अष्टावमी तटस्थेषु प्राकट्यं यदि बिभ्रति ॥ २१ ॥
कृष्णादिभिर्विभावाद्यैस्तदाऽप्यनुरसा मताः ।
कृष्णतत्प्रतिपक्षाश्चेद्विषयाश्रयतां गताः ॥ २२ ॥
हासादीनां तदा तत्र प्राज्ञैरपरसा मताः ।
एवमन्येऽपि विज्ञेयास्तेऽद्भुतापरसादयः ॥ २३ ॥
उत्तमास्तु रसाभासाः कैश्चिद्रसतयोदिताः ।
भावाः सर्वे तदाभासा रसाभासाश्च के चन ॥ २४ ॥
अमी प्रोक्ता रसाभिज्ञैः सर्वेऽपि रसनाद्रसाः ।
भारत्याद्याश्चतस्रस्तु रसावस्थानसूचिकाः ॥ २५ ॥
वृत्तयो नाट्यमातृत्वादुक्ता नाटकलक्षणे ।

इति भक्तिरसामृतसिन्धावुत्तरविभागे रसाभासलहरी ॥ ९ ॥

ग्रन्थस्य गौरवभयादस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥ १ ॥
गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनोऽस्मिन्नुत्तरभागे रसामृताम्भोधेः ॥ २ ॥

इति भक्तिरसामृतसिन्धौ गौणभक्तिरसादिनिरूपणनामा
चतुर्थो विभागः ।

रामाङ्गशक्र १४६२ गणिते शाके गोकुलमधिष्ठितेनायम्
भक्तिरसामृतसिन्धुर्विटङ्कितः क्षुद्ररूपेण ॥ १ ॥

---

*** इति श्रीहरिभक्तिरसामृतसिन्धुः ***

**समाप्तः ॥**

